


# मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र.) भारतम्.

संपुटः ९ | 15 SEPTEMBER 1971 | क्रमांकः ९



विरोधिकृति भाद्रपदांकः शकाब्दाः १८९३ मूल्यम् ४० पैसाः

# विषयसूचिका









# ताटस्थ्यं



ताटस्थ्यं ताटस्थ्यं दर्पविहीनं ताटस्थ्यं,
लाघवजनकं ताटस्थ्यं लक्ष्यध्वंसकताटस्थ्यं ।।

मित्रविघटकं ताटस्थ्यं शत्रुमोदकं ताटस्थ्यं,
आत्मनाशकं ताटस्थ्यं हास्यदायकं ताटस्थ्यम् ।।

देशदुर्बलं ताटस्थ्यं रोषविहीनं ताटस्थ्यं,
भीतिवर्तनं ताटस्थ्यं भूतिशोषकं ताटस्थ्यम् ।।

आर्तिवर्धकं ताटस्थ्यं अन्यमुखेक्षकताटस्थ्यम्,
अणुगुणवर्जितताटस्थ्यं आहो भारतताटस्थ्यम् ।।

अहिंसावादिताटस्थ्यं अरिहर्षप्रदताटस्थ्यम्,
आत्मविघ्रातकताटस्थ्यं अहो भारतताटस्थ्यम् ।।



# सम्पादकीयम्

## रथ्यासन्धिः

## 'भारतरक्षाग्रन्थिः

---

अहो महती आपत् निवृत्तप्राया या भारतदेशस्य परितः प्रसृता पाकचीनरूपशत्रुभ्यां मित्रच्छद्मभिरन्यैश्चोपकल्पिता । भारतविमानदुर्नयनप्रध्वंसन – कुचेष्टा – प्रारब्धः तादृशविद्रोहि-संरक्षणप्रवर्धितः विद्रोहः बांग्लादेशप्रजाप्रध्वंसन प्रद्रावण संधुक्षितः भारतमुभयतः संपीडयितुमारभत । पूर्वबंगालदेशसमुत्पन्नं अन्तर्भेदं व्याजीकृत्य भारतमभिद्रोग्धुं पाकचीनौ अस्तोकाग्रहमवहताम् । पाकश्च स्वदुर्नीतिफलं भारतोपरि पातयितुं अपवादान् अस्मद्देशोपरि प्राक्षिपत् । कान्दिशीकाश्च लक्षशः सीमानमुल्लंघ्य भारतमभ्यद्रवन् । पूर्वपाकेपि भारताभिमानित्वेन भाविताः भारतप्रजाबन्धवः बहवश्च हिन्दवः लुंठिता मारिताः प्रद्राविताश्च । सीमान्तभारतभूमिषु बहुवारं गुलिकाप्रयोगः जननाशः धान्यधनपश्वपरहरणं च बहुलं सम्पादितः । भारतं युद्धपङ्के अवतारयितुं तन्मूलं च आत्मानं गोपायितुं च पाकेन बहु यतितम् । किन्तु सर्वंसहः भारतदेशः प्रपंचदेशकर्णेषु आत्मस्थितिं पुनःपुनरुच्चैर्दध्मौ, भद्रतासमितये च कान्दिशीकरक्षणे भारासहतां मात्मनो न्यवेदयच्च । यद्यपि केचन देशाः कांदिशीकसहायतारूपेण रुदतेऽर्भकाय भक्ष्यखण्डमिव

यत्किंचिददुः तथापि तत् शाकाय वा लवणाय वा नासीत्। अन्ततः भारताक्रन्दनं श्रुतवन्त एव विरला आसन्। यद्यपि सर्वोदयनायकः श्री जयप्रकाशनारायणः बांग्लाजनार्तिमसहमानः प्रपंचमेव पर्यटच यथास्थितस्थितिं अवागयत्। तथापि अग्र राज्यानि गजनिमीलिकया अश्रृण्वन्।

तदन्तरमुपलभ्य पाकः एतत्सर्वं भारतकृतं कपटमेवेति प्रख्याप्य पूर्वपाकस्थाने शान्तिसंरक्षणाय पाकभारतसमावेशस्यावश्यकता प्राकथयत्। भद्रतासमितिश्च पाकेन सह सहमता भारतविषये यत्किंचिद्विकृतं चेष्टितुमयतत च। अमेरिका च भारतवचनमनुमोदमानैव युद्धसामग्रीं निर्निरोधं पाकं प्रापयत्। प्रपंचे सर्वस्मिन्नपि तादृशं कर्म अनुचितमिति घुष्यमाणेपि सा स्वाकृत्यं कृत्यमेव समर्थयत च। न केवलमेतावदेव तादृशे विपत्समय एव अमेरिकामुख्यः पाकदर्शितपथा स्वात्मवैरिणीं चीनां द्रष्टुमायासीत्। अनेन कर्मणा पाकभीकरकर्मणि न केवलं चैनायाः अपि तु अम्मेरिकाया अपि हस्तावलम्बो विद्यत इत्येव प्रपंच एवाभावयत्।

यदा स्वमन्त्रः अम्मेरिकोपरि प्रासरत् तदा पाकस्य युद्धावेशवचनानां परिमितिरेव नासीत्। तटस्थभावनिगडितात्मचरणो भारतः क्षणान्तरे नङ्क्ष्यतीति भावितं अस्मदमित्रैः। परन्तु अस्मन्नायकानां प्रतिभावलेन यथावेलं रष्यासर्वकारेण संधिरारचितः येन न केवलं शत्रुवर्ग एव प्रपंचस्सर्वोऽपि आश्चर्यचकितस्समजनि। सन्धौ चास्मिन् अयं गुणः यत्स्वताटस्थ्यमनुज्झित्यैव भारतदेशः आस्मद्रक्षणविषये रष्यासहायं सकलबिधमार्जिष्यति। अम्मेरिकाप्रवर्तितायाः कूटनीतेः प्रतिघटने अयं सन्धिः श्वदंशस्योपानत्प्रहार इव सुयुक्ता चिकित्सा समवर्तत।

अनुपदमेव आश्चर्यं! कुत्र वा गताः पाकप्रगल्भाः, कुत्र वा लीनाः चीनाचेष्टाः अम्मेरिकाहंकारः च। सर्वं परिवृत्तमासीत्। तत्क्षणं पाकः बांग्लादेशीयविषये च पुनरालोचयति, घातुकस्तिक्काखानः परावर्तितः, चैना च भारतवर्षात् क्रीडाविद आह्वयति, अम्मेरिका च स्वाचरणीयासु चर्यासु निग्रहमातिष्ठते, भद्रतासमितिश्च स्वसंकल्पान् विमृशति च।

सत्यमिदं यद्रष्याभारतसन्धिः न केवलं भारतस्य, अपितु रष्याया अपि उपद्रवनिवारणे अतनुः स्थलजलवियत्तलावृतः प्रकारस्समजनि। अनेन रष्याभारतसन्धिना प्रपंचस्यैव क्षेमो भवेदित्यत्र नाश्चर्यलेशोपि।

असाधना वित्तहीनाः बुद्धिवन्तः सुहृत्तमाः।  
साधयन्त्याशु कार्याणि काककूर्ममृगाखुवत्॥



# पदार्थविज्ञानसारः



(पूर्वानुबन्धः)

शिष्यः– यच्च ता नाशयन्ति न किं तत् निष्ठुरम् कर्म? तासाँच यत् संचित धनमपहरन्ति न किमेतदकार्यं भवति ?

गुरुः– तासामायाससञ्चितमध्वपहरणेपि न वयं दोषभागिनो भवामः, यतो हि कृत्स्नं मधु न तासां कार्योपयोगि भवति। अत्रास्माभिर्निश्चीयते परमेश्वरेणास्माकं हिताय मक्षिकाभिर्मधूनि संसृष्टानि। कथमेतासां वा वधं नाचरिष्यामः? पश्य, किं वयं मत्स्यान्न विनाशयामः? एकदा बहुतरमक्षिका यद्विनाशमुपयान्ति तत्रास्माकं खेदो भवतीति सत्यं। एवमेकस्मिन्नह्नि ये बहवश्छागा मेषादयश्च विनश्यन्ति, यदि तेऽस्माकं गोचरेप्येकदा नाशं यान्ति, तर्हि वयं सखेदास्सन्तः कथयिष्यामः एतदतीव निष्ठुरं कर्मेति। परन्तु क्रमशो विनाशेन न तादृक् खेदोस्माकमिति। परन्तु येन मधुमक्षिकाबृन्दमहत्वा लोकैर्मधु लभ्यते अस्त्येकस्तत्रोपायः। अतस्तेन रूपेण मधुग्रहणे समीचीनं हितं च भवति।

शिष्यः– मधुन्यपहृते ताभिः शीतसमये केन जीव्यते ?

गुरुः– तेषां जीवनार्थं किंचिदिव शेषितमधुस्थापनमुचितं। न चेदेवं तेषां प्रयोजनानुरूपं क्रमेण दातुमुचितं स्यादिति। यद्येवंप्रकारेण मधु गृहीतं स्यात् तर्हि तेषां निष्प्रयोजनमवशिष्टं मधु गृहीतं भवति, न कश्चिद्दोषोपि तत्र जायते।

शिष्यः– पिपीलिका किमाश्चर्यभूतो जन्तुर्न ?

गुरुः– पिपीलिका अपि मधुमक्षिकावत् सुशासितप्रजारूपाः क्षुद्र-जन्तवः सन्ति । परन्तु तासां मध्येऽयमेको विशेषः तत्र राजा नास्ति । तास्सर्वा एव स्वस्वप्रधानाः ग्रीष्मकाले भक्ष्याणि संचिन्वन्ति । एवं यत्नतो यद्भक्ष्यं संचितं भवति, तत्तु स्वाण्डोद्भवनवशाबकानां भक्षणार्थं तिष्ठति न तु शीत-कालार्थं, यतः शीतसमये ता हि निभृतवत् संकुचितास्तिष्ठं-तीत्यनुमीयते । यदा चाण्डेभ्यः शिशवो निस्सरन्ति, तदा शिशूनां शरीरस्थामावरणत्वचं यत्नेन ता निस्सारयन्ति । अनन्तरं शिशुभ्यो भक्षं दत्वा तान् वर्धितान् भ्रमणस्थानम् दर्शयन्ति ।

शिष्यः– एताः पिपीलिकाः किमपि चतुरा न ?

गुरुः– आत्मनां गृहनिर्माणे भक्ष्याणामाहरणे वासस्थले तदानयने परस्परस्याभिप्रायबोधने नियमानुसारे झडिति सर्वकर्म-साधने च तासामतिचतुरता प्रकाशते । पिपीलिकानां वासस्थानमेका नगरीव । रात्रौ च तद्द्वारम् रुद्धं तिष्ठति, दिवसे च मुक्तद्वारे द्वारपालस्तिष्ठति । एतस्यां नगर्यामात्म-हितार्थं पिपीलिकाभिर्नानागृहाणि निर्मितानि सन्ति । तत्र निवसद्भिस्ताभिरात्मनां प्रत्येकं गृहं ज्ञायते । एवमेकाग्रेण मनसा यत्नतो निजनिजकर्माणि क्रियंते च । तासां नियमे व्यवहारे च विवेचिते सति बहूपदेशोस्माभिर्लभ्यते । परन्तु तासां कर्मनैपुण्यमालोक्य पुरुषैरलसैः शिक्षा लब्धुं शक्यते । एतस्मदेव कारणात् प्राचामियमुपदेशोक्तिरस्ति – अहो अलसाः, पिपीलिकासमीषं गत्वा तासामाचरितं विलोक्य ज्ञानवन्तो भवत ।

शिष्यः– श्रुतं मया कीटविषये काचिदाश्चर्यकथास्ति ।

गुरुः– प्रथमं तेषामाकारोतिसुंदरो दृष्टो भवति । कतिपयवासरानन्तरं विकृतिं प्राप्य परमाश्चर्यरूपः प्रजापतिर्भवति ।

शिष्यः– तेषामेकस्माद्वर्गात् किमस्माकं पट्टसूत्रं न जायते ?

गुरुः–आं जायते । गुटिकाकीटैरनेन प्रकारेण पट्टसूत्रमुत्पाद्यते, तेषामुदरमध्ये क्षुद्रतरे पट्काख्यावयवे यत् श्लिष्टनिर्यासवत् वस्तु तस्मात् सूत्रं निर्मितं भवति । त्वया दृष्टं वा स्वर्णकारभवने स्वर्णसूत्रनिर्मितौ यदेकं लोहयन्त्रं विद्यते, यस्मिन् रन्ध्रजालमस्ति । तद्वत् गुटिकाकीटानां वक्त्राधस्तदाकारयन्त्रं विद्यते । तदीयरन्ध्रात् तन्निर्यासवद्वस्तु निर्गच्छति । पश्य, प्रथमं निर्वासवद्वस्तु भवति । तस्मात् निर्गतो गुणो यन्त्ररन्ध्रेणाकर्षितस्सन् दीर्घः सूत्राकारश्च भवति । तदेव पट्टसूत्रं कथयन्ति ।

शिष्यः– तस्मादपि पट्टसूत्रं कथं प्रस्तुतं भवति?

गुरुः– सजलपात्रे गुटिकामग्नितापेन प्रथमं तापयन्ति । अनन्तरं पशुलोमजसंमार्जन्या सूत्राग्रभागमनुसंधाय लब्ध्वा तत्पात्रलग्नलोहयन्त्रांतररन्ध्रे सूत्राग्रं प्रवेश्य क्रमेणापरयन्त्रेण तद्वेष्टयन्ति । केचिद्वा वंशशलाकानिर्मितघूर्णयन्त्रेण सूत्रं वेष्टयन्ति । एकस्या गुटिकायाः सूत्रं प्रायः षट्शतहस्तमितं भवति । सूक्ष्मतायामीदृशं भवति, कृतमष्टगुणितं दशगुणितं वा तत् सूत्रं साधारणकर्मोपयोगि भवति । एकस्मात् पट्टसूत्रान्नानाविधानि कौशेयवसनानि जायन्ते ।

शिष्यः– यानेतान् कृमिकीटान् वयं विजानीमस्तेभ्योऽस्माकं कत्युपकारास्सन्ति ?

गुरुः– कतिपयमनुष्यापेक्षयापि एते कीटाः स्वकीयकर्मस्वतितत्पराः परेषामुपकारकाश्च भवन्ति । तेभ्यस्तु अलसाः पुरुषाः शिक्षां लब्धुं शक्नुवन्ति ।

शिष्यः– लाक्षाकीटविषयकमहं किंचित् श्रोतुमिच्छामि ।

गुरुः– लाक्षीयैकः क्षुद्रकीटोस्ति । स च नानादेशेषु प्राप्यते । एवं नानाकर्मसूपयोगी भवति । जायते स हि चतुर्विधेषु वृक्षेषु तेषामश्वत्थवटौ प्रधानौ । गङ्गाया उभयतीरे पर्वतीयतरुषु बहवस्तत्कीटा जायन्ते । तद्देशजैर्मानुषैरनायासेन लाक्षाकीटाकुलितशाखां भङ्क्त्वा नगरेषु विक्रीयन्ते । दक्षिणामेरिकाख्यदेशात्समानीताः कति कीटा एतद्देशे बहुषूद्यानेषु स्थापितास्सन्ति । तैरप्येतस्मिन् देशे विविधलाभः क्रियते ।

शिष्यः– लाक्षाकीटात्तु केन रूपेण लाक्षा जायते ?

गुरुः– वृक्षशाखाभ्यः स्वल्पधारच्छुरिकया लाक्षा निस्सार्य एकस्मिन् पात्रे स्थाप्यन्ते । अनन्तरं नाशयित्वा शुष्काः क्रियन्ते । लाक्षाकीटबिनाशे चास्त्युपायद्वयं । कतिचित् लोकाः वंशशलाकारचितपात्रविशेषे स्थापयित्वा तानुष्णनीरे मज्जयन्ति । अनंतरं मृतान् तान् सूर्यतापैः शुष्कयन्ति । केचित् तप्तलोहकटाहाभ्यन्तरे स्थापयित्वा एकदैव विनाशशुष्कौ कुर्वन्ति । सुष्ठु शुष्कान्कृत्वा बहुदिनपर्यन्तं स्थापितानामपि तेषां न काचिदपि हानिर्जायते ।

शिष्यः– लाक्षयास्माकं किं कार्यं भवति ?

गुरुः– लाक्षा नानाकर्मोपयोगिनी भवति । तया स्त्रीणां करभूषणं निर्माति यल्लौकैश्चूडीति प्रोच्यते । तया च मालाहारादिकमशेषभूषणं भवति । पूर्वस्मिन्काले केनचिदौषधेन संमिश्रितासीत् । इदानीं गलनवर्तीकरणे काष्ठपटादिचित्रणे वस्त्ररञ्जने च तस्यास्सर्वदा प्रयोजनमस्ति ।

(क्षेत्रः)

❖❖❖❖❖❖❖❖❖❖

१



# विनोबा विजयी यतिः

ले० श्री या वि० देवासकरः, वटपत्तनम् ·

षट्सप्ततिसुवर्षाणि यस्य पूर्णानि जन्मनः ।
भावेकुलसमुत्पन्नो विजयी स विनायकः ।। ।। १ ।।

शारदाया अभीष्टः स बहुभषाविशारदः ।
कल्याणार्थं च सर्वेषां स जीवति सुसंयमी ।। ।। २ ।।

अचलश्चात्मतत्त्वेभ्यो ह्यचलायां यथाऽचलः ।
विद्वांश्च प्रतिभावांश्च जीवेत्स शरदः शतम् ।। ।। ३ ।।

अपूर्वैस्तत्त्ववादैः स प्रेरितः सततं सुधीः ।
यतते ध्येयसिद्ध्यर्थं विनोबा विजयी यतिः ।। ।। ४ ।।

तपस्वी निरहंकारो निर्भयोऽस्ति सदैव सः ।
आनन्दं ब्रह्मणो विद्वान्, जीवेत्स शरदः शतम् ।। ५ ।।

# श्रीसुरभारत्याः सुषमा

ले०. पण्डितः शे. रङ्गनाथशर्मा, कोयमुत्तूरु.



श्रीरस्तु सुरभारत्याः भारते सम्भृताऽनिशम् ।
संस्कृतेः भारतीयायाः कारणं या निगद्यते ॥

वेदशास्त्रपुराणानाम् इतिहासयुजां च या ।
मन्त्र - तन्त्र - महायोगग्रन्थजातस्य चाकरः ॥

आधारः सर्वविद्यानाम् अत्मज्ञानप्रदायिनी ।
अणोरणोयसी सैषा महतोऽपि महीयसी ॥

पदसंस्कारसंयुक्ता सजीवाक्षरमण्डिता ।
अमृता मधुरा दिव्या दिव्यसूरिभिरादृता ॥

गुणालङ्कारसंयुक्ता सव्यङ्ग्या च रसावहा ।
रञ्जयन्ती सहृदयान् भारते भाति भारती ॥

भाषाणां मातृभूतेयम् मधुरस्वरभूषिता ।
माधुर्यं चान्यभाषासु स्वयमातनुतेऽन्वहम् ॥

सुरलोकाद् मर्त्यलोक मवतीर्णेयमादरात् ।
शिवमौलौ यथा गङ्गा केवलं पावनाय नः ॥

आसेतोर्हिमवच्छैलं भाष्यते बहुशो जनैः ।
तथापि सुरभारत्याः न कुत्राप्यपभाषितम् ॥

पाञ्चभौतिकविज्ञानविमर्शस्यैकसाधनम् ।
ऐकमत्यस्य सर्वेषास् सुरगीरौषधं स्मृतम् ।।

प्रथिताः कालिदासाद्याः कवितावसुधाधिपाः ।
शतसाहस्रसङ्ख्याकाः ववर्षुः संस्कृतीं सुधाम् ।।

बुद्ध्वा व्याकरणं यस्याः पाणिनिः स पतञ्जलिः ।
विस्तृतां सुषमां चक्रे सेयं संस्कृतभारती ।।

भारतीयप्रभुत्वस्य दिगन्तेषु प्रचारिणी ।
सम्भावनीया सर्वैश्च भारते सुरभारती ।।

  

वाणीं भजत गैर्वाणीं वाग्विलासाय सादरम् ।
चित्ते कुरुत हे बालाः ! सुलभा शुभदा च सा ।।





# उद्धरेदात्मनात्मानम्

ले० डा० डि. अर्कसोमयाजी, तिरुपति.

आत्मानं स्वयमेव शक्ष्यति समुद्धर्तुं हि यः कोपि वा
नान्यः कश्चन शक्ष्यति क्षितितलेऽप्युद्धर्तुकामोऽपि तम् ।
गीतायां भगवानुपादिशदिदं सत्यं रहस्यं परम्
स्वं कर्मेव पुराकृतं प्रभवति त्रातुं जनं भूतले ।।

तन्मे जीवितवर्त्मनि प्रतिकलं दृग्गोचरीभूय मां
कर्तव्ये निरतं करोतु; न परान् याचै स्ववाचा प्रभो !
पूर्वं यद्यकरिष्यमीश्वरपदाम्भोजातसेवां तदा
साक्षान्मोक्षमुपैष्यमेव गमितं व्यर्थं मया जीवितम् ।।

पातुं मृत्युमुखात्सुतं च पितरौ किं पारयेतां तथा
पत्नीं वा स्वपतिः, पतिं च गृहिणी भृत्याश्च किं स्वं प्रभुम् ?
यः कश्चित् पुरुषो महानपि जनं न त्रातुमीष्टे स्वयम्
पुण्यान्येव पुराकृतानि पुरुषं रक्षन्ति मृत्योर्मुखात् ।।

मूर्खश्चेत् स बुधायते किमु सुतः पित्रा समध्यापितः ?
मूर्खस्याऽपि पितु नः किं सुततया जायेत विद्वद्वरः ?
सध्बुद्धि च पतिव्रता किमु पतिं कर्तुं समर्था भवेत् ?
सर्वस्स्वस्य पुराकृतेन भवति श्रीमान् दरिद्रोऽपि वा ।।

स्वा शक्तिः परमेश्वरस्य च दया स्वस्मिन् उभे एव ते
स्वं त्रातुं हि समर्हतः क्षितितले नान्यो जनः कश्चन ।
एतत्सत्यमवेहि सोदर ! वृथा किं याचसेऽन्यान् जवान् ?
वृक्षः किं जनतां स्वपोषणकृते बद्धाञ्जलिर्याचते ?



भाषाकुमारीणां

# विवादपरिहारः

(रूपककारः - साहित्यालङ्कारः पं० पडाल ब्रह्मरेड्डि कोङ्कुदुरु.)

प्रथमं दृश्यम्

(नेपथ्ये गानं श्रूयते)

ध्यातव्योऽयं हितोपदेशः स्मर्तव्योऽयं मनसि सदा ।
अध्येतव्या संस्कृतभाषा विस्मर्तव्या नैव कदा ॥

मुख्या मधुरा दिव्या हृद्या ललिता रुचिरा सुरवाणी ।
सरला मृदुला मनोमोहिनी सुधास्यन्दिनी सुबोधिनी ॥

ऋषिभिः पूता कविभिर्गीता रसिकश्रेष्ठैः समादृता ।
सुजनसेविता विश्ववन्दिता मतिमन्दैरपि स्वयं वृता ॥

ध्यातव्योऽयं हितोपदेशः स्मर्तव्योऽयं मनसि सदा ।
अध्येतव्या संस्कृतभाषा विस्मर्तव्या नैव कदा ॥

सूत्रधारः– अहो ! गानमिदं मन्मनसि पीयूषबिन्दुवर्षं कुर्वद् आह्लादयति सुतराम् । किञ्च भावपरिपूर्णमिदं गीतं श्रावं-श्रावं आत्मानं आधुनिककालञ्च विस्मृत्य मन्ये यदहं शान्तिमयवातावरणयुक्ते धर्मप्रधाने अतीते युगे आसमिति ।

मरिषः– त्वं किमिति आत्मानं विस्मृत्य कल्पनालोके निमग्नोऽसि?

सूत्र– केनापि गीयमानं मृदुमधुरं संस्कृतमाहात्म्यप्रबोधकञ्च गीतमाकर्ण्य आत्मानं किं, सर्वमपि विस्मृतोऽस्मि ।

(स्मृतिमभिनीय) अद्य खलु चित्तूरुस्थितायाः संस्कृत-भाषाप्रचारिण्याः सभायाः रजतोत्सवः। सन्दर्भेऽस्मिन् सभ्यानां मनोविनोदाय एकाङ्कं नाटकं प्रदर्शयितव्यं किल।

मारिषः– भाव, किं रूपकं प्रदर्शयितव्यमिति त्वया चिन्तितम् ?

सूत्र– सुविचार्य मया निर्णीतमस्ति यत् पूर्वगोदावरीमण्डलान्तर्गत-मण्डपेटस्थपरिषद्बालिकोन्नतपाठशालाया भूतपूर्वसंस्कृत-पण्डितेन साहित्यालङ्काराद्युपाधिविभूषितेन पडाल ब्रह्मरेड्डिना विरचितं "भाषाकुमारीणां विवादपरिहारो" नाम अभिनव मेकाङ्कं नाटकं दर्शयित्वा सभ्यान् आनन्द-तरङ्गितान्तरङ्गान् करिष्याम इति।

मारिषः– तर्हि त्वर्यतां, त्वर्यताम्। कालोऽतिगच्छति।

सूत्र–आगम्यताम् इत एव काश्चित् कन्यका आगच्छन्तीव दृश्यन्ते।

(इति निष्क्रान्तौ)

(तमिलान्ध्रार्यभाषाकुमारीणां प्रवेशः।

तमिलभाषाकुमारी– री सखि! सम्प्रति वयं दिने दिने परिपुष्टाः भवाम इति मन्ये।

आन्ध्रभाषाकुमारी– तत्कथमिव ?

तमिल– पुरा अस्मासु भावप्रकाशनाय शक्तिरेव नासीत्। गद्यस्य दर्शनमपि अमावास्यायामालोक इवासीत्। अधुना तु आंग्लभाषासंसर्गतः भावप्रकटनशक्तिः, गद्यस्य विकासश्च सुतरां भवति। अपि च, तत्साङ्गत्यवशादेव खलु साहि-त्यस्य विविधाङ्गानां पुष्टिर्भवति। अत एव वयं दिने दिने परिपुष्टा भवाम इत्यहं वदामि। तवाभिप्रायः कः ?

आन्ध्र– (विहस्य) यद्यपि तव वचसि सत्यमंशतो वर्तते, तथापि मिथ्यांशोऽधिकतया विद्यत इति कृत्वा तव भाषितं मत्-सम्मतं नास्ति । या आंग्लभाषा सप्तसागरदूरवर्तिनां मातृ-भाषा, अस्मद्विरुद्धगुणयुक्तत्वात् परकीयेति वक्तव्या अस्ति, तया अस्मद्भारतीयभाषाणामुन्नतिः कथं भवेत् ? "आवश्यकताऽऽविष्काराणां जननी भवती"ति महतामु-क्त्युनुसारं साम्प्रतिके युगे गद्यस्य, साहित्यस्य च यदा आवश्यकता अनुभूता प्रजाभिः, तदा तयोर्विकासः क्रमशः भवतीत्यहं तर्के ।

आर्यभाषाकुमारी– समस्तभाषाणां साहित्ये प्रथमतः पद्यस्यैव कृतयः उपलभ्यन्ते । परस्तात् क्रमशो गद्यस्य विकासो भवति । अत एव स्वभावतः भारतीयभाषासु गद्यविकासः गद्यरचनाश्च अवलोक्यन्ते । अस्मिन् कर्मणि आंग्लभाषायाः ईषदपि साहाय्यं नास्तीति त्रिरपि वक्तव्यम् । आंग्लभा-षायामपि प्रथमतः गद्यस्योपलब्धिर्भवति किम् ? सुतरां नास्ति । यदा कर्गजस्याविष्कार आसीत्कृतः, तदाप्रभृति सर्वासु भाषासु साहित्यरचनाः, साहित्यस्य विविधाङ्गानां च कृतयः प्रभूततया सञ्जाताः, इतः परमपि शुक्लपक्ष-कलानिधिरिव दिने दिने वर्धिष्यन्त एव । विज्ञानस्य प्रभावतः आविष्कृतेन मुद्रणसौकर्येणापि च कर्मण्यस्मिन् बहूपकृतमासीत् ।

आन्ध्र– "विज्ञान" शब्द श्रवणाद् मम मनसि विचारः उत्थितो भवति यद् भारतीयाः आंग्लभषापठनेनैव विज्ञानेन आवि-ष्कृतनूतनसामग्रीणामुपभोगं तासां परिचयादिकं प्राप्तुम-शक्नुवन्निति । यदि भारते आंग्लभाषायाः प्रसारः,

तस्या राजभाषात्वं न भवेत्तर्हि वयं कूपमण्डूका इव विज्ञानस्य नामापि न ज्ञातुं प्रभवेम ।

तमिल– आंग्लभाषापठनमात्रेण विज्ञानोन्नतिः भवेत्किम्? वर्तमानयुगे यानि विज्ञानस्य नूतनवस्तून्युपलभ्यन्ते, तानि सर्वाणि आंग्लेयैराविष्कृतानि किम्? नहि, नहि, तासु बहूनां वस्तूनामाविष्कारः अन्यत्रैव शर्मण्यफ्रेञ्चेटल्यादिविदेशेषु कृत आसीत् । आंग्लदेशे तु विज्ञानस्य गतिः सर्वसामान्या एवासीत् । यदि भारते रष्यन्, जर्मन्, फ्रेञ्चभाषाणामध्ययनं प्रचालितमासीतर्हि वयं विज्ञानस्योन्नततमशिखरमारुह्य वर्तामहे । आंग्लेयास्तु विश्वस्योच्चतमभाषाणां विज्ञानग्रन्थान् स्वकीयायामांग्लभाषायामनुवदन्ति । तथैव भारतीया अपि तेषां ग्रन्थानां भाषान्तरीकरणं स्वकीयभाषासु विधास्यन्ति चेत् तर्हि सुष्टु भवेत् । आंग्लभाषायाः शिक्षा विज्ञानस्योन्नतिभिक्षामस्मभ्यं प्रददातीति विश्वासः मूर्खतायाः परा काष्ठैव । विषयेऽस्मिन् आर्यभाषाकुमारी किं वा मन्यते ?

आर्य– तवोक्तं सर्वमपि सत्यमेव । यावत्पर्यन्तं जयपाणादिदेशा आंग्लभाषायै राष्ट्रभाषापदवीं दत्तवन्तः, तावत्पर्यन्तं तेषां देशानां विज्ञानोन्नतिः सन्तोषदायिनी नासीत् । ते यदाऽऽरभ्य स्वीयाः भाषाः राष्ट्रभाषारूपेण स्वीकृत्य तासामभिवृद्धिं कर्तुमारभन्त, तदाप्रभृति खलु तेषु देशेषु विज्ञानस्याभिवृद्धिः तेषां प्रतिष्ठा च वृद्धिमाप्तुमारभत । तदा हि भारतस्य सर्वतोमुखी वृद्धिर्भवतीति मे दृढो विश्वासः, यदा आंग्लभाषां भारततः अपसार्य स्वकीयभाषासु या काचन शासकीयभाषा, राजभाषा च क्रियते ।

(अनुवर्तते)



श्री कामकोटिपीठाधिष्ठितानां

श्री जयेन्द्रसरस्वतीस्वामिनां

# चित्पुरागमनम्

चित्पुरस्य विंशतिक्रोशदूरे विद्यमाने कार्वेटिनगरे आत्मगुरुवर्यैः महातपस्विभिः श्री चन्द्रशेखरेन्द्रसरस्वतीयोगिवर्यैस्साकं चातुर्मास्यव्रतं सविशेषं निर्वर्तितवन्तः श्री जयेन्द्रसरस्वतीयोगिवर्याः व्रतान्ते भाद्रकृष्णप्रतिपदि पादचारेण प्रस्थिताः ८–९–७१ दिनस्य रात्रिं यावत् चित्तूरनगरमागमन् । पौरैश्च पूर्णकुम्भसंभृतकरैः दिव्यज्ञानसंघभवनद्वारे प्रत्युद्गतैः भगवद्भजनपुरस्सरं श्री सी. वेङ्कटरमणय्यरभवनमानीयते निवेशिताः । परेद्युः ९–९–७१ प्रातः जीवकारुण्यसंघभवनमानीतेभ्यः स्वामिभ्यः जीवकारुण्यान्नदानसमाजेन संस्कृतभाषाप्रचारिण्या सभया श्रीरामविलाससभया विजयमुद्राशालया श्री वर्णाकिंडरगार्डन पाठशालया स्थानिक विश्वहिन्दूपरिषदा अन्यैश्च कतिभिश्चित् पण्डितैः स्वागताभिनन्दनाभिवन्दनपत्राणि समर्पितानि । श्रीस्वामिभिश्च तानि सर्वाण्यङ्गीकुर्वद्भिः स्वधर्मानुगुणप्रवर्तनं प्रजासु आवश्यकमिति प्रबोध्य सर्वेजना आशीर्भि रभितोषिताः ।

# संस्कृतभाषाप्रचारसभाभवनदर्शनम्



तस्मिन्नेव दिने सायं पंचघण्टासमये स्वामिनः संस्कृतभाषाप्रचारिणीं सभां स्वपादरजःपूतामकुर्वन् । तत्र प्रथमं पूर्णकुम्भसमर्पणपुरस्सरं आहूतास्ते भवनप्रासादमास्थाय प्रथमम् माणवकानन्वगृह्णन् । माणकाश्च हर्यष्टकस्तोत्रं अपठन् । स्वामिनश्च अत्यन्तसन्तुष्टाः प्रत्येकं देवीपदकप्रदानेन तान् पर्यतोषयन् । अनन्तरं सभाकार्यदर्शिना श्रीमता एन्. रामनाथार्येण सभाचरित्रप्रस्तावपुरस्सरं षोडशोत्तरशतं रूप्यकाणि समर्पितानि । सभाया कार्यवर्गसदस्यः पंडितः श्री मुनिरेड्डिः संस्कृतज्ञानावश्यकतां प्रस्तुतकाले तस्य दीनस्थितिं, तस्य उद्धरणीयतां च न्यवेदयत् । ततः प्रधानमन्त्री तिरुवेङ्कडाचार्यः संस्कृतप्रचारे सभायाः दृढदीक्षां, तत्र च आत्मबालकानां निशुल्ककक्षासु प्रवेशनमात्रसहकारं च पौरान् अयाचत । श्रीस्वामिवर्याश्च संस्कृतावश्यपठनीयतां स्वप्रसंगे निरूप्य संस्कृतभाषाप्रचारिण्याः सभायाः कार्यनिष्टां प्रास्तुवन् ।

श्रीस्वामिनां आगमनसमये संस्कृतभाषाप्रचारिण्या सभया समर्पितः भक्तिकुसुमांजलिरत्र निवेश्यते ।



श्री गुरुभ्यो नमः

# 'भक्तिकुसुमाञ्जलिः

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु

श्रीमदखिलभूमंडलालंकार त्रयस्त्रिंशत्कोटिदेवतासेवित श्रीकामाक्षीदेवीसनाथ श्रीमदेकाम्रनाथ श्रीमहादेवीसनाथ श्रीहस्तिगिरिनाथ साक्षात्कारपरमाधिष्ठान सत्यव्रतनामांकित कांचीदिव्यक्षेत्रे शारदामठसुस्थितानां, अतुलितसुधारसमाधुर्य कमलासनकामिनीधम्मिल्लसंफुल्लमल्लिकामालिकानिष्यंदमकरन्द-झरीसौवस्तिकवाङ्निगुम्भविजृंभणानन्दतुन्दिलितमनीषिमण्डलानां, अनवरताद्वैतविद्याविनोदरसिकानां, निरन्तरालंकृतीकृतशान्ति-दान्तिभूम्नां, सकलभुवनचक्रप्रतिष्ठापकश्रीचक्रप्रतिष्ठाविख्यातय-शोलंकृतानां, निखिलपाषण्डषण्डकण्टकोद्घाटनेन विशदीकृतवेद-वेदान्तमार्गषण्मतप्रतिष्ठापकाचार्याणां, श्रीमत्परमहंसपरिव्राजका-चार्यवर्यजगद्गुरुश्रीमच्छंकरभगवत्पादाचार्याणां अधिष्ठाने सिंहा-सनाभिषिक्तश्रीमच्चंद्रशेखरेन्द्रसरस्वतीसंयमींद्राणां अन्तेवासिवर्य

**श्रीमज्जयेन्द्रसरस्वतीस्वामिपादानां**

पदसरोजयुगळे सभक्तिप्रणामपूर्वकं संस्कृतभाषाप्रचारिण्या
सभया समर्पितः भक्तिकुसुमांजलिः ।

कामाक्षीकरुणाकटाक्षलहरीपारिप्लवैर्भूषिते
चैकाम्रेश्वरदिव्यभव्यविलसद्वात्सल्यसंपूरिते ।
श्रीकाञ्चीनगरे समस्तनगरीसीमन्तमुक्तायिते
श्रीमन्! पालय कामकोट्यभिधपीठाधीश्वरास्मानिमान् ॥ १ ॥

पुण्या चित्पुरसीमा गण्याऽस्मत्संस्कृतप्रचारसभा ।
धन्या वयं त्वदीयाः त्वत्पदसंपर्कभाग्यतो जाताः ॥ २ ॥

भवन्तु त्वत्कृपावीक्षारक्षावर्धितसम्पदः ।
प्रजाः स्वात्मावबोधोत्थनित्यानन्दाः सदा प्रभो ! ॥ ३ ॥

श्रुतिशतसंप्रचोदितमृषिप्रवर
प्रवचनसत्स्मृतिप्रथितधर्मरहस्यभृतम् ।
अभिमतनित्यसत्यहितमात्मभृतां
अव निजभारतप्रथितसंस्कृतिमूलधनम् ॥ ॥ ४ ॥

आत्मावबोधविधुरो न हि मोक्षमेति,
बोधश्श्रुतिस्मृतिविवेचनतोऽभ्युपैति ।
तादृग्विवेचनपदं खलु संस्कृतं चेत्,
तत्संस्कृतं कथमुपेक्षितुमर्हमस्ति? ॥ ॥ ५ ॥

सर्वकरेपि च विमुखे सकलजनेष्वप्युपेक्षकेषु भृशम् ।
संस्कृतवाणी विधुरा समीक्षते श्रीजयेन्द्रमुखम् ॥ ॥ ६ ॥

श्रुतिसदः श्रुतिभाष्यविदां सभा स्मृतिविवेचनसंसदथापि च ।
विविधशास्त्रविदुत्तमकाव्यकृन्महितगोष्ठ्यपि ते विहृतं गुरो ! ॥

चंद्रशेखरयोगिराट्पदसेवनात्तसुबोधनं
चंद्रशेखरदारकामाक्षीकटाक्षपवित्रितम् ।
श्रीजयेन्द्रसरस्वतीन्द्रमनन्यभक्तियुजा हृदा
सेवते खलु संस्कृतोत्तमगीःप्रचाररता सभा ॥ ॥ ८ ॥

भव भव भवाभिभावी, भज भज शिष्येषु सद्दयां सततम् ।
यज यज निजात्मवेदिन् ! जय जय जय श्रीजयेन्द्रगुरो ! ॥ ९ ॥

मंगळं श्रीकामकोटिमातृपूजामहौजसे ।
श्रीजयेन्द्रसरस्वत्यै श्रितरक्षणधीजुषे ॥ ॥ १० ॥



## अन्तर्जातीयरामायणमहोत्सवः इंडोनेषियायाम्



इंडोनेषियायां आगस्ट ३० तिथितः सेप्टंबर पर्यन्तं अन्तर्जातीयरामायणमहोत्सवः निर्वर्त्यते। तत्र भारतब्रह्मकांभोजमलेषियानेपालतायलांडसिंहलदेशाः भागं गृण्हन्ति। भारतसर्वकारश्च नाटचबृन्दद्वयं तत्र प्राहिणोत् यत्रैकः केरल पी. एस्. नाटचबृन्दसंबन्धी कथाकलिनाटचधुरीणः। स च वृन्दः सांप्रदायानुगुणं रामायणं प्रदर्शयेत्।

द्वितीयश्च ग्वालियरीयः रंगश्री लिटिलबालेटबृन्दः यः रामामगघट्टान् नवीनविधया प्रदर्शयेत्।

आग्नेयासियासंस्कृतेः सर्वजनप्रचारार्थं रामायणप्रदर्शनविषये गोष्ठ्यपि तत्र प्रचलति। श्रीमती रुक्मिणीदेवी, डा० आशुतोषभट्टाचार्यः प्रो. ए. श्रीनिवासराघवः, डा. लोकेशचंद्रश्च तत्र गोष्ठ्यां प्रामुख्यमवहन्।



## अपूर्वः संस्कृतांग्लकोशः



पूनानगरस्थ डेक्कन् कलाशालाशोधसंस्थाने एतत्कोशनिर्माणोद्योगः प्रारब्धः। अत्र भारतीया अभारतीयाश्च पंडिताः संस्थाननिर्देशकस्य डा. एस्. एम्. कत्रे महोदयं प्रधानसंपादकं आवेश्य कार्यक्रममारभन्त। एककोटिरूप्यकाणां व्ययोत्र संभाव्यते, मार्कि विंशतिसंपुटाः सहस्रपृष्टपूर्णा भवेयुरिति च। एतच्च कार्यं १९८६ वर्षे समाप्तिर्भष्यतीति च विभाव्यते।

6

इतः पूर्वमेव १८७५ वर्षे रष्यादेशे ४५० संस्कृतग्रन्थानां समालोचनपूर्वकं शर्मण्यपण्डिताभ्यां निर्मितात् पीटरसंस्कृतकोशादपि अत्र विशेषः अकांक्ष्यते । अत्र क्रीस्तोः पूर्वं द्विसहस्रवर्षप्राचीनानामपि ग्रन्थानां समालोचनपूर्वकं पदपदार्थादीनां निवेशनं क्रियते । अत्र कार्ये भारतसर्वकारः महाराष्ट्रसर्वकारः पूनाविश्वविद्यालयः यु. जी. सी. युनेस्को संस्थाश्च अर्थसाहाय्यमाचरिष्यन्तीति आनन्ददायकम् ।



## गोधूमांकुररसस्य रोगनिवारणशक्तिः

लें० श्री रांपल्लि श्रीरामचन्द्रमूर्तिः, पोड्रूरु.

भारतीयाः गोधूमधान्यस्य उपयोगं ऋग्वेदकालादपि जानन्ति । अद्य बहुदेशेषु गोधूमनिर्मितान् आहारपदार्थान्विविधप्रकारान् भक्षयन्ति । किंतु दक्षिणभारतीयास्तु अद्य गोधूमोपयोगं किंचित् किंचित् जानन्ति । अद्य वैद्यप्रपंचे अद्भुतावहो विप्लवो जातः । सोपि विप्लवः गोधूमात् अजनि । अमेरिकादेशीया डाक्टर विग्मोर्नामधेया वनिता निरन्तरं चिकित्साविषयकैः परिशोधनैः गोधूमांकुररसे सर्वरोगनिवरणशक्तिः अस्ति इति प्रकटीचकार । आधुनिकवैद्यनिपुणैः निराशानिस्पृहभ्यां चिकित्सा निरुपयोगेति मत्वा वैद्यालयेभ्यः प्रेषितान् केन्सर् - क्षय - मधुमेहादि - भयंकररोगैः पीडितान् जनान् विग्मोर्नामधेया गोधूमांकुररसेनैवारक्षत् । गोधूमांकुरपालनपोषणादिकं सुलभतरमेवेति सा वदति । पालिकातु पुष्पकुंडिकाः उत शिथिलदेवदारुपेटिका वा मृदा पूरयित्वा गोधूमबीजान् वापयेत् । अनंतरं जलं सिंचन् आतपप्रसाररहिते प्रदेशे निक्षिपेत् ।

साप्ताहिकपरिमिते काले पंचषांगुलपरिमितान् गोधूमांकुरान् समूलमुन्मूल्य मूलच्छेदं कृत्वा शिलोलूखले निक्षिप्य मुसलादिना पीडयेत् । एतद्रसं प्रतिदिनम् द्विवारं पिबेत् । गोधूमांकुररसस्य मार्कि द्विमासपर्यंतसेवनेन रोगविमुक्तो भवत्यातुरः ।

तथा अमेरिकादेशीयया वनितया आंग्लभाषायाम् पुस्तकानि बहूनि आरचितानि । भारतदेशे गुजरात्प्रांते पूनाप्रांते च पुण्याः प्रांतीयभाषासु तानांग्लग्रन्थान् अनूद्य परिशोधनैः गोधूमांकुररस-प्रदानेन च अनेकान् दीर्घरोगपीडितान् नीरोगान् कुर्वन्ति इति शम् ।



## वरलक्ष्मीव्रतमहोत्सवः

लें० आ० वरदराजन्, अध्यक्षः, ज्यो. सं. विद्यापीठम् ·



३०–७–७१ भृगुवासरे ज्योतिस्संश्लेषविद्यापीठस्य आध्यक्ष्येण श्रीजगन्मङ्गलसौभाग्यदेवताश्रीवरमहालक्ष्मीव्रतोत्सवः निर्वर्तितः । ग्रामोत्सवः, सहस्रनामार्चनं, होमः, गोपूजा, विद्यार्थिनां संस्कृत-कण्ठपाठपरीक्षा, सांस्कृतिकोपन्यासः, गानसभा, हरिकथाकालक्षेपः, परेद्युः अखण्डरामभजनं, योग्यतापत्र - पुरस्कार - सम्भावनादिप्रदनं इत्यादि निरन्तरकार्यक्रमेण नडवलूरे सम्पन्नः ।

श्रीमद्भिः आयुर्वेदविद्वद्भिः भिषग्वरैः यं. सि. वि. सुब्र-ह्मण्यमहोदयैः विद्यापीठस्य सांक्रुतिकपुस्तकप्रदर्शनं आविष्कृतम् । विद्यापीठाध्यक्षैः निम्ननिर्दिष्टाः बिरुदप्रदानेन च सम्भाविताः ।

श्री विद्वान् के. गोविंदस्वामी – ढोलुवाद्यपरिबृढः

श्री विद्वान् के. गंगय्या – ढोलुविद्यानिरूढः

श्री विद्वान् बि. वेंकटेश्वरभागवतः – हरिकथाकुशलः

इति बिरुदप्रदानं सभामोदेन समाचरितम् ।



# मतानि - समैक्यभावः

ले० समुद्राल वेङ्कटरङ्गरामानुजाचार्यः, द्वारकतिरुमल.



मतशब्दस्य ज्ञानं, इष्टमिति वा अर्थकथने न दोषः । प्राप्यायाः स्थतेः सुलभप्रापकमिति दृष्टया व्यवस्थापितं प्रस्थानमेव मतम् । तच्च प्रस्थानं केन वा जनेन प्रतिष्ठितं भवति स एव तस्य प्रवर्तक इति व्यवह्रियते । प्रवर्तकः स्वप्रतिष्ठितं प्रस्थानं सर्वेषामप्युपादेयं भवेदिति बुद्धयैव तत् प्रवर्तयति । अनेन च प्रकारेण प्रवर्तकस्य परजनतितारयिषाभावः व्यक्तोभवति । एवं स्वयं तीर्णः यो वा परानपि तारयितुमिच्छति स एव सत्प्रवर्तक इति कथ्यते । तादृशेन प्रवर्तकेन प्रवर्तितमेव मतं सर्वेषामुपादेयं भवति । मतस्वरूपमाकलयन्तो जनाः स्वेषां प्राप्या परा स्थितिः काचनास्तीति मत्वा तां प्राप्तुं सर्वदा यत्न आवश्यक इति च स्थिरमभिप्रयन्ति ।

एवं सर्वेषामपि जनानां प्राप्यस्थित्यैक्यभावसम्पादनेन क्रमशः सर्वेष्वपि जनेषु परस्परादरभावसम्पादनाय मतानि प्रभवन्ति । समैक्यभावसाधनमेव मतानां परमलक्ष्यम् । मतद्वारा जनेषु समैक्यभावसम्पादनमेव तत्प्रवक्तॄणां लक्ष्यम् । मतं ह्येकं प्रस्थानं भवतीति हेतोः प्रवक्तॄणामनुभवस्थितिमवलम्ब्यैव तस्य स्वरूपस्वभावादयस्तिष्ठन्ति । मतप्रवक्तॄणां सर्वेषामप्यनुभवः यद्येकरूपो भवेत्तर्हि मतान्यपि तानि एकरूपतामेव भजन्ते । यदि मतप्रवक्तॄणामनुभवाः विभिन्ना भवन्ति तर्हि तेषामपि स्वरूपस्वभावादयः भिद्यन्ते । अथापि मतानां सर्वेषां परमलक्ष्यमेकमेव । तदेव मोक्षप्राप्तिः । तत्तन्मतानुसारेण मोक्षस्वरूपमपि भिद्यताम्, तथापि तेषां परमलक्ष्यन्तु सर्वानुगतं, न भेदभाक् ।

एवं परमपुरुषार्थमोक्षप्रापणाय प्रवक्तारः भिन्नभिन्नरीत्या प्रस्थानानि निर्ममिरे। एतेषु प्रस्थानेषु किमप्यनुसरन् मुमुक्षुः अवश्यं मोक्षमुपगच्छेदिति निश्चप्रचम्। अत्र मुमुक्षोरनुभवस्थितेर्यत्समीपस्थं प्रस्थानं तदेव मुमुक्षुरवलम्बते। अतः परमपुरुपार्थे संलग्नमनाः मुमुक्षुः मतानि साधनतयाऽवलम्ब्य प्राप्यां परां स्थितिमभिगन्तुं यतेत।

एतादृशेन परमोत्कृष्टेनैव भावेन द्वैताद्वैतविशिष्टाद्वैताख्यानि त्रीणि मतानि आस्तिक्यबुद्धिप्रधानानि प्रादुरभवन्। एतेषां त्रयाणां स्वरूपे भिन्नेऽपि परमतात्पर्यन्तु मोक्षप्रापणे एव।

पूर्वोक्तमतप्रतिष्ठापकाः मध्वशङ्कररामानुजाः स्वप्रतिष्ठितानां मतानां सम्पूर्णानुभवं प्राप्यैव तानि प्रवर्तयामासुः। एवं स्वप्रतिष्ठितमतप्रचारे क्रियमाणे, परसिद्धान्तखण्डने, स्वसिद्धान्तस्य दाढर्याय श्रुतिस्मृतिप्रमाणप्रदर्शने च ते प्रवृताः अभवन्। अत्र परसिद्धान्तनिराकरणे एव प्राचार्याणां तात्पर्यम्, नतु व्यक्तिदूषणे। तैश्च प्रत्येकशः स्वसिद्धान्तप्रतिपादनेऽपि सर्वथा परेषां सिद्धान्तानां अनुपादेयत्वे न तेषां तात्पर्यम्। श्रीमच्छङ्करभगवत्पादानां श्लोकमिमं पश्यन्तु।

यथा– त्रायी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति  
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।  
रुचीनां वैचित्र्यात् ऋजुकुटिलनानापथजुषां  
नृणामेको गम्यः त्वमसि पयसामर्णव इव" ॥ इति।

अस्यायं भावः – त्र्य्याख्याः ऋग्यजुस्सामवेदाः, योगशास्त्रं, शैवमतं, वैष्णवमतं, साङ्ख्यमिति भिन्नरूपेण प्राप्यस्थितिप्रापकेषु प्रस्थानेषु सत्सु, इदमेवोत्कृष्टं, इदमेवोत्कृष्टं, इदमेव हितकारीति सम्भावयन्तो नराः स्वस्वाभिप्रायवैचित्र्यानुरोधेन केचित् ऋजौ, केचिच्च कुटिले मार्गे आसक्ताः भवन्ति। एषां सर्वेषामपि जनानां

गम्यस्तु परमात्मैव। अस्मिन् विषये भूमौ वर्षणात् पतितानां जलानां अर्णवे एव लयः इत्येतदुदाहरणत्वेन दत्तम्। यथा सर्वेषां वर्षजलानां नदीरूपं गतानां समुद्र एव गम्यं स्थानं, तद्वत् विभिन्न-मार्गावलम्बिनामपि जनानां अन्ततः परमात्मैव गम्यो भवतीति तात्पर्यम्। अनेन श्लोकेन सर्वेषामपि मतानां लक्ष्यैक्यं व्यज्यते।

एषा च मतप्रादुर्भावसमये वर्तमाना स्थितिः। सा च क्रमशः विपरिणता अभवत्। मतेषु जनानामादरभावः भिन्नभिन्न-मतावलम्बकेषु परस्परविद्वेषः, कलहाश्च संप्रवृत्ताः। एषैव स्थितिः अधुना वर्वर्ति। अधुनातनकाले हिंसायुतकर्मणां अशान्तेश्च मतान्येव कारणमिति दुर्भावः दृढं जनहृदयस्थः अभूत्। एतादृश-स्थितेरुत्पन्तौ को हेतुरिति परिशीलनं कार्यम्। परिस्थितिविचा-रणे क्रियमाणे मतप्रचारकेषु लक्ष्यशुद्धिमतविषयकपरिज्ञानयोः राहित्यमेव प्रधानतया हेतुरिति प्रतिभाति। प्रस्तुतकाले राजकीयैः साकं मतानां सम्बद्धतापि बहुधा क्रियते। प्रनानतमस्यास्य जाड्यस्य चिकित्साया अभावे महोत्कृष्टलक्ष्यैरुद्भूतानां मतानां स्वरूपहानिरेव भविष्यतीति वक्तुं शक्यते। अतः पूर्वोक्तजाड्यस्य सत्वरचिकित्सां विधाय दुष्प्रचारविषमूर्छितानां मतानामुच्जीवनं चित्तशुद्धिलक्ष्यपरिज्ञानवत्प्रचरकैरवश्यकार्यं भवति।

यावत्पर्यन्तं मतानां परमलक्ष्यं जानानां बुद्धिपथारूढं न भवति तावदपि एषा वर्तमाना स्थितिः न विपरिणमितुं शक्यते। पूर्वस्थितिसम्पादनाय मतपरमलक्ष्योज्जीवनाय च विवेकानन्दा-दिभिरादृत एव पन्थाः ज्यायान्। तन्मार्गानुसारेण मतप्रचारणमेव अर्वाचीनमतप्रचारकाणां अवश्याचरणीयम्।

यदि समैक्यसाधकानां मतानां परमलक्ष्यं जनैः सम्यक् ज्ञातमभविष्यत् तर्हि अस्मदीया प्रभुता मतातीतैव (Secular) अभविष्यत्।

★

अमरवाण्यामनूदितं

# श्रीपारिजातापहरणकाव्यम्

ले० श्री. न. च. वेंकटताताचार्यः, विशाखपट्टणम्.

आन्ध्रोक्तिबोधविधुरस्य जनस्य चित्तं
आनन्दितुं विबुधवाक्चयनिर्मितं सत् ।
शश्वत् चकास्तु भुवने वरकाव्यमेतत्
श्रीवात्स्यतातकवितल्लजशिल्पमत्र ॥

स्वेच्छानुवादरचना क्रियते मयाऽद्य
तस्मादहं विपुलगद्यमुखान् अमुञ्चम् ।
यद्वाचने कृतधियामपि चित्तसीम्नि
संजायते विपुलनीरसताप्रसक्तिः ॥

संप्रार्थयामि विनयेन मनीषिणो वः
क्षन्तुं मदीयमिह साहसकृत्यमेतत् ।
शीतांशुबिम्बगतमङ्कमवेक्ष्य सर्वे-
प्याह्लादभावमुपयान्ति किलात्र लोके ॥

### कथाप्रारम्भः

रमापतिर्भूमिसुतं सुरारिं विजित्य तद्गेहगता लताङ्गीः ।
सहस्रसंख्याः स्वगृहं निनीय चकार ताः स्वीयकुटुम्बिनीः सः ॥

तत्पूर्वमासन् किल तस्य कान्ताः अष्टौ प्रसिद्धाः महिषीमतल्ल्यः ।
याभिस्सदा पुष्पवनस्थलीषु क्रीडापरः कालमसौ निनाय ॥

यदा यदा या वनितामतल्ली यथा यथा तेन विहर्तुकामा ।
तदा तदा तां तरुणीमणिं सः रिरंसुरासीत् खलु तद्वदेव ॥

एवं स कुर्वन्नपि वासुदेवः भीष्मात्मजासत्यवतीद्वयेऽस्मिन् ।
प्रीतिं परां दर्शयति स्म बाढं विहाय तन्वीरितरास्सदैव ॥

अथैकदा क्रीडति वासुदेवे द्यूतं समं भीष्मसुतामतल्या ।
जगाम सद्यः किल नारदोऽत्र दिशन् माहाश्चर्यमभूतपूर्वम् ॥

तथा समायातमुनिं प्रणम्य तौ दम्पती चक्रतुरातिथेयम् ।
दासी समानीतमहार्घपीठे निविष्टमेनं हरिरेवमाह ॥

देवर्षिवर्य! भवदागमनेन नूनं
एषोऽहमद्य नितरामभवं कृतार्थः ।
शश्वन्मयि प्रियतया भवदागमस्य
को वास्ति हेतुरिति वक्तुमशक्यमेव ॥

तदा स मौनी हरिमेवमाह न युक्तमेवं नरवत् प्रवक्तुम् ।
यतोऽखिलेशाद्य न वेद्मि किं ते महाप्रभावं भुवनप्रसिद्धम् ॥

दशावतारेषु भवत्कृतानि जानामि सर्वाणि विचेष्टितानि ।
रक्षःस्त्रियामुन्नतिभंजनं च भुजङ्गनेतुर्बलदर्पनाशम् ॥

एषा पुरी स्यात् किल निर्विवादं वैकुण्ठ एवात्र न कापि शङ्का ।
लक्ष्मीरियं भीष्मसुता भवांश्च नारायणो वामसकृन्निषेवे ॥

एवं तु संस्तुत्य ददौ स मौनी कल्पद्रुपुष्पं वरपारिजातम् ।
कृष्णाय तस्मै गगनस्रवन्तीसंजातपङ्केरुहपत्रगुप्तम् ॥

आदाय पुष्पं विनयेन कृष्णः भीष्मात्मजां वीक्ष्य मनाक् विचिन्त्य ।
सात्राजितीं चञ्चलचित्तवृत्तिः प्रायच्छदन्ते कुसुमं महिष्यै ॥

(अनुवर्तते)

# सुभाषितानि

लेo श्री यन् . रामनाथार्यः

(पूर्वानुबन्धः)

नगरस्थो वनस्थो वा पापो वा यदि वा शुचिः ।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥ ४०२ ॥

Whether one's husband lives in a town or forest, whether he is sinful or undesirable, those women alone enjoy all prosperity, who are affectionate to their husbands.

न दुर्जनस्साधुदशामुपैति बहुप्रकारैरपि शिक्ष्यमाणः ।
आमूलसिक्तं पयसा घृतेन न निंबवृक्षो मधुरत्वमेति ॥ ४०३ ॥

A wicked person, though he is well instructed, does not become noble hearted. The neem tree does not become delicious, even when the entire tree is soaked in milk and ghee.

न निर्मिता नैव च दृष्टपूर्वा न श्रूयते हेममयः कुरङ्गः ।
तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥ ४०४ ॥

No one has seen or heard of a golden deer in creation, yet Sri Rama was desirous of possessing it At the time of impending calamity one's mind behaves in a strange manner.

अमितगुणोपि पदार्थः दोषेणैकेन निन्दितो भवति ।
अमितरसायनमहितः गन्धेनोग्रेण लशुन इव ॥ ४०५ ॥

A thing becomes unacceptable due to a single defect in it, though it is possessed of number of other qualities; the garlic, though esteemed very high as a medicine, is detested due to its offensive smell.

नाद्रव्ये निहिता काचित् क्रिया फलवती भवेत् ।
न व्यापारशतेनापि शुकवत्पाठ्यते बकः ॥ ॥ ४०६ ॥

An instruction imparted to an unworthy person does not result in in any benefit. With any amount of effort, a crane cannot be taught, as a parrot.

निधानमिव मंडूकाः सरः पूर्णमिवांडजाः ।
सोद्योगं नरमायान्ति विवशास्सर्वसंपदः ॥ ॥ ४०७ ॥

Just as frogs gather in a reservoir, birds flock to a tank full of water, riches seek a person of their own accord, who is full of initiative and enterprise.

यथा खरश्चदनभारवही भारस्य वेत्ता न तु चन्दनस्य ।
तथैव विप्राः खलु शास्त्रयुक्ताः धर्मेण हीनाः पशुभिस्समानाः ॥

Just as a donkey knows the weight of the sandalwood carried by it but not its worth, so also, wise men full of erudition, but devoid of righteous conduct, are equal to animals.

(अनुवर्तते)

# व्याख्यातारः

ले० शिरोमणिः, विद्वान्, संगीतभूषणम् टि· जि. अनन्तसुब्रह्मण्यः, तिरुपति·

बहोः कालादनन्तरं श्रीमन्नारायणाज्ञया सहस्रशीर्षः शेषः भूलोकस्य गोनर्दक्षेत्रे वसन्त्याः गोणिकानाम्न्याः तपस्विन्याः करे अपतत् । तदा गोणिका माध्याह्निकार्घ्यप्रदानं कुर्वती आसीत् । अञ्जलिबद्धपाणौ पतितत्वात् "पतन्+अञ्जलौ" पतञ्जलिरिति नाम अभूत् अस्य । करे स्थितं पतञ्जलिं दृष्ट्वा भयेन गोणिका अपृच्छत् कोर्भवान् इति ।

पतञ्जलिः – "सपोऽहम्"? इति ।
"रेफः कुत्र? – इति गोणिका ।
"त्वया अपहृतः" – इति पतञ्जलिः ।

एतादृशं व्याकरणशास्त्रानभिज्ञं लोकं दृष्ट्वा पतञ्जलिः पाणिनिव्याकरणसूत्राणां व्याख्यानं रचयामास । तस्य व्याख्यानस्य नाम "महाभाष्य" मिति । भाष्यमित्युक्ते पतञ्जलिकृतमहाभाष्य-मित्येव लोके प्रसिद्धमभूत् । अत एव "महाभाष्यं वा पठनीयं, महाराज्यं वा शासनीय"मिति अभियुक्तोक्तिरुद्भूता । कारणं? महाभाष्यशैली अतीव मनोहरा, ललितपदविन्यासघटिता, सुबोधभावा, गाम्भीरभाषा च भवति ।

अनन्तरं भगवान्पतञ्जलिः चिदम्बरक्षेत्रस्य सहस्रस्तम्भ-मण्डपे स्वद्विसहस्रजिह्वाभिः शिष्यान्पाठयामास महाभाष्यम् । सहस्रशिराः स्वस्य शिष्याणाञ्च मध्ये पटेन तिरोभूय पाठं कृतवान् स्वरसनाविषवायुभीत्या । त्रिभिः मुनिभिः कृतं शास्त्रं "त्रिमुनि व्याकरण" मिति नाम्ना प्रशस्यते प्रपञ्चे । एतेषु त्रिषु मुनिषु उत्तरोत्तरं बलीयस्त्वं शास्त्रे । पाणिनेः वररुचिः प्रधानः, वररुचेः पतञ्जलिः प्रधान इति ।

एतेन व्याकरणशास्त्रं पाणिनिमारभ्य पतञ्जलिपयन्तं वृद्धिमाप। अत्र बहुकालादनन्तरं "भर्तृहरिः" पातञ्जलमहाभाष्यस्य "वाक्यपदीय" मिति नाम्ना व्याख्यानं कृतवान्। अपि च कैयटः, वामनः, जयादित्यः, हरदत्तः, रामचन्द्रः, शेषकृष्णाचार्य इत्यादयः महापण्डिताः व्याकरणशास्त्रस्य व्याख्यानरूपग्रन्थान्बहून् रचयामासुः।

अनन्तरं छात्राः, पण्डितास्सर्वे च सुलभेन मार्गेण व्याकरणशास्त्रं ज्ञातुं, पठितुञ्च प्रभवेयुरिति मत्या श्री शेषकृष्णाचार्याणां मुख्यशिष्यभूतैः श्री भट्टोजीदीक्षितवर्यैः सर्वाणि व्याख्यानानि सम्यगालोड्य सरलया भाषया, सुन्दर्या शैल्या, सरसेन मार्गेण "सिद्धान्तकौमुदी" नाम व्याख्याग्रन्थः पाणिनिसूत्राणां व्यरचि। एतद्व्याख्यानमेव अद्यतनलोके प्रसिद्धरूपेण अन्यादृशस्थानं वहति।

किञ्च श्री भट्टोजीदीक्षिवर्यैः "प्रौढमनोरमा" इति व्याख्याग्रन्थः कृतः स्वीयसिद्धान्तकौमुद्याः। तथैव वार्तिकानां, परिभाषाणाञ्च व्याख्यानानि बहूनि कैश्चन पण्डितवरैः कृतानि सन्ति। अत एव खलु "पाणिनीयस्य शास्त्रं तु सर्वशास्त्रोपकारक"मिति प्रथा जागर्ति।

एतद्व्याकरणशास्त्रस्य अद्यतनकाले मालिन्यं, दौर्बल्यञ्च दृश्यते। इदं पठने, पाठने च वैरल्यमाप्नोति। "सिद्धान्तकौमुदी" ग्रन्थस्य अज्ञाः बहवस्सन्ति। तेऽपि पण्डितरूपेण तत्र तत्र विलसन्ति। अहो शोचनीया दशा व्याकरणशास्त्रस्य! किं ब्रूमः! किं कुर्मः!! क्व गच्छामः!!!

"सिद्धान्तकौमुद्याः ज्ञानं नास्ति चेत् संस्कृतभाषायाः ज्ञानमपि नास्तीति निश्चप्रचं वक्तुं शक्यम्। श्रीपरमेश्वरकृपयैव व्याकरणशास्त्रं वृद्धिं प्राप्नुयादिति प्रार्थ्य विरम्यते। इति शिवम्।

## विद्वत्सु विज्ञाप्यते

संस्कृतभाषाप्रचारिण्यास्सभायाः रजतोत्सवसन्नाहः प्रचलति । उत्सवविशेषांकश्च सम्मुद्रितप्रायः । तत्परिपूर्तिमधिगत्य उत्सवदिनादिनिर्णयः क्रियेत । मन्ये प्रायशः द्वित्रमासे स महोत्सवः निर्वर्त्येतेति ।

तत्संदर्भे नवनवरचितानां प्रकाशितानां वा संस्कृतग्रन्थानां प्रदर्शनीमपि निर्वोढुं व्यवस्यति सभा। अतः कृपया संस्कृते नवप्रकाशिताः, अप्रकाशिताः करलिपिरूपेण वर्तमाना वा ग्रन्थाः पत्रपत्रिकाश्च (नागरी-तेलुगु-ग्रन्थ-कर्णाटकादि लिपिषु यासु कासुचिदपि वर्तन्ताम्) प्रेषयित्वा प्रदर्शिनीं सविशेषं विभूषयन्त्विति प्रार्थये ।

अपि च संस्कृतप्रचारसामग्री तत्तत्संस्थाभिरुपयोज्यमाना सापि प्रेषणीया ।

यद्यपि महती ग्रन्थराशिः नवनिर्मिता वर्तते भारते, तथापि तत्तद्रचयितृसंकेताद्यपरिज्ञानात् प्रत्येकं प्रार्थने अशक्ता वयं एतद्विज्ञापनद्वारा अभ्यर्थयामहे यथाशक्ति सहयोगदानाय ।

ये केचिच्च महानुभावा ग्रन्थान् प्रेषितवन्तः तेषां विषये कृतज्ञता आविष्क्रियते ।

प्रार्थयिता,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
*R. N. 1845/60.* *Postal R. No. H. 493*

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ४-००

# प्रहेलिकाः

संख्यादशकसंयुक्ता घंटावादनतत्परा ।
दीर्घवालेन सहिता अहं का वर वर्णिनि?

(पेट्रोलनाकः)

वनानि नद्यो गिरयश्च सन्ति न यत्र वृक्षा न जलं न सानुः ।
मार्गास्सुसूक्ष्माः पशुमर्त्यदूराः दोषज्ञ! मन्नाम वदाद्य शीघ्रम् ।।

(भूगोलगोलः)

गृह्णामि वैद्यस्य सदा हि कर्णौ दीर्घो मदीयः पुनरङ्गनाळः ।
शब्दग्रहोऽहं गदशोधशीलः दोषज्ञ! मन्नाम वदाद्य शीघ्रम् ।।

(स्टेतस्कोपः)

– विद्वान् बालगणपतिभट्टः

Published by Sri N. Ramanatha Iyer B. A; B. L., Advocate
& Secretary S, B, P, Sabha, Chittoor (A. P.)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500